## ॥ श्रीतुलसीनामाष्टकस्तोत्रम् अष्टनामावलिश्च ॥

वृन्दा वृन्दावनी विश्वपूजिता विश्वपावनी ।
पुष्पसारा नन्दिनी
च तुलसी कृष्णजीवनी ॥
एतन्नामाष्टकं स्तोत्रं
पठन्मङ्गलमाप्नुयात् ।
वृन्दायै नमः । वृन्दावन्यै नमः ।
विश्वपूजितायै नमः ।
विश्वपावन्यै नमः । पुष्पसारायै
नमः । नन्दिन्यै नमः ।
तुलस्यै नमः । कृष्णजीवन्यै नमः ॥ (८)

तुलसी श्रीमहालक्ष्मीः
विद्याऽविद्या यशस्विनी ।
धर्म्या धर्मावनासक्ता पद्मिनी श्रीर्हरिप्रिया ॥
लक्ष्मीप्रियसखी देवी द्यौर्भूमिरचला चला ।
षोडशैतानि नामानि तुलस्याः कीर्तयेन्नरः ।
लभते सुतरां भक्तिं अन्ते विष्णुपदं लभेत् ॥

तुलस्यै नमः । श्रीमहालक्ष्म्यै
नमः । विद्यायै नमः । अविद्यायै
नमः । यशस्विन्यै नमः । धर्म्यायै नमः ।
धर्मावनासक्तायै नमः ।
पद्मिन्यै नमः । श्रियै नमः । हरिप्रियायै नमः ।
लक्ष्मीप्रियसख्यै नमः । देव्यै नमः । दिवे
नमः । भूम्यै नमः ।
अचलायै नमः । चलायै नमः ।

|| तुलसीमहिमा ||

# महादेव उवाच ।

विष्णुप्रीतिं करोत्वेषा तरुर्भूत्वा महीतले ।
शरीरमर्ज्यतामस्याः श्रीविष्णुप्रीतये गणाः ॥ १॥
अस्याः पत्रेण वृन्दायाः पूजितः स्यात् स्वयं हरिः ।
नान्येनेति सुविज्ञेयं मणिमुक्तादिनापि च ॥ २॥
नामास्यास्तुलसीत्यस्तु पवित्रायाः सुपावनम् ।
तकारो मरणं प्रोक्तं तद्योगः स्यादुकारतः ॥ ३॥
मृता लसति चेत्येवं तुलसीत्येव गीयते ।
स्थितः प्रतिदलेष्वस्या मन्त्रो द्वादशवर्णकः ॥ ४॥
अधिष्ठात्री देवतास्यामावां देवीमहेश्वरौ ।
नारायण उपास्योऽस्याः प्रियेयं वैष्णवी मता ॥ ५॥
(द्वादशवर्णकः अथवा द्वादशाक्षरविष्णुमन्त्रः
ॐ नमो भगवते वासुदेवाय ।)

॥ इति बृहद्धर्मपुराणे सप्तमोऽध्याये महादेवप्रोक्तं
तुलसी प्रादुर्भावसहिता तुलसीमहिमा सम्पूर्णा ॥

## ॥ वृन्दावनस्तोत्रम् ॥

वृन्दाटवी सहजवीतसमस्तदोषा
दोषाकरानपि गुणाकरतां नयन्ती ।
पोषाय मे सकलधर्मबहिष्कृतस्य
शोषाय सुस्तरमहाघचयस्य भूयात् ॥ १॥

वृन्दाटवी बहुभवीयसुपुण्यपुञ्जा
क्षेत्रातिथिर्भवति यस्य महामहिम्नः ।
तस्येश्वरः सकलकर्म मृषा करोति
ब्रह्मादयस्तमतिभक्तियुता नमन्ति ॥ २॥

वृन्दावने सकलपावनपावनेऽस्मिन्
सर्वोत्तमोत्तमचरस्थिरसत्त्वजातौ ।
श्रीराधिकारमणभक्तिरसैककोशे
तोषेण नित्यपरमेण कदा वसामि ॥ ३॥

वृन्दावने स्थिरचराखिलसत्त्ववृन्दा-
नन्दाम्बुधिस्वपनदिव्यमहाप्रभावे ।
भावेन केनचिदिहाऽमृति ये वसन्ति
ते सन्ति सर्वपरवैष्णवलोकभूम्नि ॥ ४॥

इति वृन्दावनस्तोत्रं सम्पूर्णम् ।

# ॥ तुलसीस्तुति ॥

तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे ।
नमस्ते नारदनुते नारायणमनःप्रिये ॥ १॥
मनः प्रसादजननि सुखसौभाग्यदायिनि ।
आधिव्याधिहरे देवि तुलसि त्वां नमाम्यहम् ॥ २॥
यन्मूले सर्वतीर्थानि यन्मध्ये सर्वदेवताः ।
यदग्रे सर्व वेदाश्च तुलसि त्वां नमाम्यहम् ॥ ३॥
अमृतां सर्वकल्याणीं शोकसन्तापनाशिनीम् ।
आधिव्याधिहरीं नृणां तुलसि त्वां नम्राम्यहम् ॥ ४॥
देवैस्त्वं निर्मिता पूर्वं अर्चितासि मुनीश्वरैः ।
नमो नमस्ते तुलसि पापं हर हरिप्रिये ॥ ५॥
सौभाग्यं सन्ततिं देवि धनं धान्यं च सर्वदा ।
आरोग्यं शोकशमनं कुरु मे माधवप्रिये ॥ ६॥
तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा ।
कीर्तिताऽपि स्मृता वाऽपि पवित्रयति मानवम् ॥ ७॥
या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुःपावनी
रोगाणामभिवन्दिता निरसनी सिक्ताऽन्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ ८॥

इति तुलसीस्तुतिः समाप्ता ।

# ॥ श्रीतुलसी अष्टोत्तरशतनामावली ॥

ॐ श्री तुलस्यै नमः । ॐ नन्दिन्यै नमः । ॐ देव्यै नमः । ॐ शिखिन्यै नमः । ॐ धारिण्यै नमः । ॐ धात्र्यै नमः । ॐ सावित्र्यै नमः । ॐ सत्यसन्धायै नमः । ॐ कालहारिण्यै नमः । ॐ गौर्यै नमः । ॐ देवगीतायै नमः । ॐ द्रवीयस्यै नमः । ॐ पद्मिन्यै नमः । ॐ सीतायै नमः । ॐ रुक्मिण्यै नमः । ॐ प्रियभूषणायै नमः । ॐ श्रेयस्यै नमः । ॐ श्रीमत्यै नमः । ॐ मान्यायै नमः । ॐ गौर्यै नमः ॐ गौतमार्चितायै नमः । ॐ त्रेतायै नमः । ॐ त्रिपथगायै नमः । ॐ त्रिपादायै नमः । ॐ त्रैमूर्त्यै नमः । ॐ जगत्रयायै नमः । ॐ त्रासिन्यै नमः । ॐ गात्रायै नमः । ॐ गात्रियायै नमः । ॐ गर्भवारिण्यै नमः । ॐ शोभनायै नमः । ॐ समायै नमः । ॐ द्विरदायै नमः । ॐ आराद्यै नमः ।jॐ यज्ञविद्यायै नमः । ॐ महाविद्यायै नमः । ॐ गुह्यविद्यायै नमः । ॐ कामाक्ष्यै नमः । ॐ कुलायै नमः । ॐ श्रीयै नमः । ॐ भूम्यै नमः । ॐ भवित्र्यै नमः ॐ सावित्र्यै नमः । ॐ सरवेदविदाम्वरायै नमः । ॐ शंखिन्यै नमः । ॐ चक्रिण्यै नमः । ॐ चारिण्यै नमः । ॐ चपलेक्षणायै नमः । ॐ पीताम्बरायै नमः । ॐ प्रोत सोमायै नमः । ॐ सौरसायै नमः । ॐ अक्षिण्यै नमः । ॐ अम्बायै नमः । ॐ सरस्वत्यै नमः । ॐ संश्रयायै नमः । ॐ सर्व देवत्यै नमः । ॐ विश्वाश्रयायै नमः । ॐ सुगन्धिन्यै नमः । ॐ सुवासनायै नमः । ॐ वरदायै नमः । ॐ सुश्रोण्यै नमः ॐ चन्द्रभागायै नमः । ॐ यमुनाप्रियायै नमः । ॐ कावेर्यै नमः ॐ मणिकर्णिकायै नमः । ॐ अर्चिन्यै नमः । ॐ स्थायिन्यै नमः । ॐ दानप्रदायै नमः । ॐ धनवत्यै नमः । ॐ सोच्यमानसायै नमः । ॐ शुचिन्यै नमः । ॐ श्रेयस्यै नमः । ॐ प्रीतिचिन्तेक्षण्यै नमः ॐ विभूत्यै नमः । ॐ आकृत्यै नमः । ॐ आविर्भूत्यै नमः । ॐ प्रभाविन्यै नमः । ॐ गन्धिन्यै नमः । ॐ स्वर्गिन्यै नमः । ॐ गदायै नमः । ॐ वेद्यायै नमः । ॐ प्रभायै नमः । ॐ सारस्यै नमः । ॐ सरसिवासायै नमः । ॐ सरस्वत्यै नमः । ॐ शरावत्यै नमः । ॐ रसिन्यै नमः । ॐ काळिन्यै नमः । ॐ श्रेयोवत्यै नमः । ॐ यामायै नमः । ॐ ब्रह्मप्रियायै नमः । ॐ श्यामसुन्दरायै नमः । ॐ रत्नरूपिण्यै नमः । ॐ शमनिधिन्यै नमः ॐ शतानन्दायै नमः । ॐ शतद्युतये नमः । ॐ शितिकण्ठायै नमः । ॐ प्रयायै नमः । ॐ धात्र्यै नमः । ॐ श्री वृन्दावन्यै नमः । ॐ कृष्णायै नमः । ॐ भक्तवत्सलायै नमः । ॐ गोपिकाक्रीडायै नमः । ॐ हरायै नमः ॐ अमृतरूपिण्यै नमः । ॐ भूम्यै नमः । ॐ श्री कृष्णकान्तायै नमः । ॐ श्री तुलस्यै नमः ॥

## ॥ प्रदक्षिणनमस्कारविधिः ॥

# अन्यद्गुह्यतमं

किञ्चित्कथयामि तवाग्रतः ।

प्रदक्षिणे फलं चैव नमस्कारे तथैव च ॥

# पञ्चाशद्भिर्भवेत्

लक्ष्मीः शतैश्च विजयः स्मृतः ।

# लक्षे तु सर्वसिद्धिः

स्यात् नात्र कार्या विचारणा ॥

भविष्यपुराणतः

# ॥ श्रीवृन्दावनाष्टकम् ॥

मुकुन्दमुरलीरवश्रवणफुल्लहृद्वल्लरी
कदम्बककरम्बितप्रतिकदम्बकुञ्जान्तरा ।
कलिन्दगिरिनन्दिनीकमलकन्दलान्दोलिना
सुगन्धिरनिलेन मे शरणमस्तु वृन्दाटवी ॥ १॥

विकुण्ठपुरसंश्रयाद् विपिनतोऽपि निःश्रेयसात्
सहस्रगुणितां श्रियं प्रदुहती रसश्रेयसीम् ।
चतुर्मुखमुखैरपि स्पृहिततार्णदेहोद्भवा
जगद्गुरुभिरग्रिमैः शरणमस्तु वृन्दाटवी ॥ २॥

अनारतविकस्वरव्रततिपुञ्जपुष्पावली
विसारिवरसौरभोद्गमरमाचमत्कारिणी ।
अमन्दमकरन्दभृद्विटपिवृन्दवृन्दीकृत
द्विरेफकुलवन्दिता शरणमस्तु वृन्दाटवी ॥ ३॥

क्षणद्युतिघनश्रियोव्रजनवीनयूनोः पदैः
सुवग्लुभिरलङ्कृता ललितलक्ष्मलक्ष्मीभरैः ।
तयोर्नखरमण्डलीशिखरकेलिचर्योचितै-
र्वृता किशलयाङ्कुरैः शरणमस्तु वृन्दाटवी ॥ ४॥

व्रजेन्द्रसखनन्दिनीशुभतराधिकारक्रिया
प्रभावजसुखोत्सवस्फुरितजङ्गमस्थावरा ।
प्रलम्बदमनानुजध्वनितवंशिकाकाकली
रसज्ञमृगमण्डला शरणमस्तु वृन्दाटवी ॥ ५॥

अमन्दमुदिरार्बुदाभ्यधिकमाधुरीमेदुर
व्रजेन्द्रसुतवीक्षणोन्नर्तनतीलकण्ठोत्करा ।
दिनेशसुहृदात्मजाकृतनिजाभिमानोल्लसल्-
लताखगमृगाङ्गना शरणमस्तु वृन्दाटवी ॥ ६॥

अगण्यगुणनागरीगणगरिष्ठगान्धर्विका
मनोजरणचातुरीपिशुनकुञ्जपुञ्जोज्ज्वला ।
जगत्त्रयकलागुरोर्ललितलास्यवल्गत्पद
प्रयोगविधिसाक्षिणी
शरणमस्तु वृन्दाटवी ॥ ७॥

वरिष्ठहरिदासतापदसमृद्धगोवर्धना
मधूद्वहवधूचमत्कृतिनिवासरासस्थला ।
अगूढगहनश्रियो मधुरिमव्रजेनोज्ज्वला
व्रजस्य सहजेन मे शरणमस्तु वृन्दाटवी ॥ ८॥

इदं निखिलनिष्कुटावलिवरिष्ठवृन्दाटवी
गुणस्मरणकारि यः पठति सुष्ठु पद्याष्टकम् ।
वसन् व्यसनमुक्तधीरनिशमत्र सद्वासनः
स पीतवसने वशी रतिमवाप्य विक्रीडति ॥ ९॥

इति श्रीरूपगोस्वामिविरचितस्तवमालायां
श्रीवृन्दावनाष्टकं सम्पूर्णम् ।

|| वृन्दादेव्यष्टकम् ||

# विश्वनाथचक्रवर्ती ठकुरकृतम् ।

गाङ्गेयचाम्पेयतडिद्विनिन्दिरोचिःप्रवाहस्नपितात्मवृन्दे ।
बन्धूकबन्धुद्युतिदिव्यवासोवृन्दे नुमस्ते चरणारविन्दम् ॥ १॥
बिम्बाधरोदित्वरमन्दहास्यनासाग्रमुक्ताद्युतिदीपितास्ये ।
विचित्ररत्नाभरणश्रियाढ्ये वृन्दे नुमस्ते चरणारविन्दम् ॥ २॥
समस्तवैकुण्ठशिरोमणौ श्रीकृष्णस्य वृन्दावनधन्यधामिन् ।
दत्ताधिकारे वृषभानुपुत्र्या वृन्दे नुमस्ते चरणारविन्दम् ॥ ३॥
त्वदाज्ञया पल्लवपुष्पभृङ्गमृगादिभिर्माधवकेलिकुञ्जाः ।
मध्वादिभिर्भान्ति विभूष्यमाणाः वृन्दे नुमस्ते चरणारविन्दम् ॥ ४॥
त्वदीयदौत्येन निकुञ्जयूनोः अत्युत्कयोः केलिविलाससिद्धिः ।
त्वत्सौभगं केन निरुच्यतां तद्वृन्दे नुमस्ते चरणारविन्दम् ॥ ५॥
रासाभिलाषो वसतिश्च वृन्दावने त्वदीशाङ्घ्रिसरोजसेवा ।
लभ्या च पुंसां कृपया तवैव वृन्दे नुमस्ते चरणारविन्दम् ॥ ६॥
त्वं कीर्त्यसे सात्वततन्त्रविद्भिः लीलाभिधाना किल कृष्णशक्तिः ।
तवैव मूर्तिस्तुलसी नृलोके वृन्दे नुमस्ते चरणारविन्दम् ॥ ७॥
भक्त्या विहीना अपराधलेशैः क्षिप्ताश्च कामादितरङ्गमध्ये ।
कृपामयि त्वां शरणं प्रपन्नाः वृन्दे नुमस्ते चरणारविन्दम् ॥ ८॥
वृन्दाष्टकं यः शृणुयात्पठेच्च वृन्दावनाधीशपदाब्जभृङ्गः ।
स प्राप्य वृन्दावननित्यवासं तत्प्रेमसेवां लभते कृतार्थः ॥ ९॥
इति विश्वनाथचक्रवर्ती ठकुरकृतं वृन्दादेव्यष्टकं सम्पूर्णम् ।